# संस्कृत-वार्ताः

**दिनाङ्कः** 23-12-**2020**

**प्रातः - **06: 55

**मुख्य-वार्ताः**

- प्रधानमन्त्री नरेन्द्रमोदी भारतीय प्रतिभायां निवेशार्थं वैश्विक-समुदायं समाह्वयत्। असौ भारतीय-अन्ताराष्ट्रिय-विज्ञान-महोत्सवे सम्भाषते स्म।
- अमेरिकाध्यक्षेण प्रदत्तः प्रधानमन्त्रिणे नरेन्द्रमोदिने अमेरिकायाः सर्वोच्चः सैन्यसम्मानः
- जम्मू-कश्मीरे जनपदविकासपरिषदः मतगणना शान्तिपूर्वकं प्रचलति। त्रयोविंशति-आसनेभ्यः मतगणना सम्पन्ना।
- राष्ट्रियान्वेषणाभिकरणेन केरले प्रवर्तितम् अन्वेषणाभियानम्।
- देशे संक्रणात् स्वस्थीभूतानां प्रतिशतता समेध्य पंचनवति दशमलव षट् पंच परिमिता।

**कोविड ओपनिंग**

कोरोणामहामार्याः विरुद्धं देशः ऐक्यभावनया युद्ध्यते। भवन्तोऽपि अस्माभिः सह सुरक्षायाः उपायत्रयस्य संकल्पं स्वीकुर्वन्तु

- **मुखावरंक सन्धारयन्तु** –
- **सामाजिकदौर्यं परिपालयन्तु**,
- **पाणिपादं च यथासमयं प्रक्षालयन्तु। वार्ताः विस्तरशः**

**प्रधानमन्त्री**

प्रधानमंत्री नरेन्द्र मोदी भारतीय-प्रतिभायां निवेशार्थं वैश्विक-समुदायं समाह्वयत्। प्रावोचत् यत् भारतमस्ति वैश्विकस्तरीय-वैज्ञानिकसमस्यानां समाधाने सक्षमम्। असौ गतदिने प्रवर्तमानवर्षस्य भारतीय अंतर्राष्ट्रीय विज्ञान महोत्सवस्य शुभारम्भं व्यदधात्। दृश्यश्रव्यप्रणालिकया कार्यक्रमं सम्बोधयन् प्रधानमंत्री प्रत्यपादयत् यत् अस्माकं वैज्ञानिकै: क्रांतिपराणि कार्याणि सम्पादितानि सन्ति। एवं देशे विज्ञानस्य, प्रौद्योगिक्या:, नवाचारस्य च समृद्ध-परम्परा अस्ति। अस्मिन् दिशि प्रशासनेन विहितै: प्रयासै: जगतो विश्वास: भारते अतोपि संवर्धित:। प्रधानमंत्री सविशेषं अवोचत् यत् तदीयं प्रशासनं कथंकारमपि समाह्वानं सम्मुखीकर्तुं, अथ अनुसंधानात्मकस्य वातावरणस्य परिष्कारम् उद्दिश्य वर्तते सर्वथा संकल्पितम्।प्रधानमन्त्रिणोक्तं -देशे वैज्ञानिकीं दृष्टिं समुन्नेतुं अभिनवा शिक्षा नीति: समुपस्थापिता अस्ति। अत्र दिशि प्रशासनेन अन्येपि नैकविधा: पदक्रमा: उत्थाप्यन्ते। प्रधानमंत्री न्यगदत् यत् यथा देशेन अंतरिक्षक्षेत्रे सफलता अवाप्ता, सामुद्रिकक्षेत्रेपि तथैव अवाप्स्येत् इत्येतदर्थं प्रयासा: समाचर्यमाणा: सन्ति। अत्रावसरे केन्द्रीय विज्ञानप्रौद्योगिकी पृथ्वी विज्ञान मंत्री च डॉक्टर हर्षवर्धन: समुपस्थित: अवर्तत।अवधेयमस्ति यत् समाजे वैज्ञानिकचिन्तनस्य संवर्धमानाय पंचवर्षपूर्वं भारतीय अंतर्राष्ट्रीय विज्ञान महोत्सवस्य परिकल्पना कृता विज्ञानप्रौद्योगिकी-

पृथ्वीविज्ञान-मंत्रालयेन चापि विज्ञान भारत्या समं सम्मिल्य कार्यमिदं समारब्धम् आसीत्।एतदुद्देश्यं जनसामान्यस्य विज्ञानेन समं संयोजनं अथ विद्यते।

**प्रधानमन्त्री पुरस्कारः**

संयुक्त-राष्ट्रामेरिकायाः अध्यक्षेण डोनल्ड-ट्रम्पेण तत्रत्यः सर्वोच्चः सैन्य-सम्मानः द लीजन ऑफ मैरिट इत्याख्यः प्रधानमन्त्रिणे नरेन्द्रमोदिने उपायनीकृतः। ट्वीट् सन्देश-माध्यमेन प्रधानमन्त्रिणा श्रीमता मोदिना ट्रम्पं प्रति हार्दाः धन्यवादाः प्रकटिताः। प्रोक्तं यत् अमेरिकाध्यक्षेण डोनल्ड ट्रम्पेण तत्रत्यम् सर्वोच्चसैन्यसम्माननं प्राप्य अहं अनुगृहीतोस्मि। सम्मानमिदं भारतामेरिकयोः दृढ़ान् द्विपक्षीयान् सम्बन्धान् द्योतयति।

**शिक्षामंत्री**

केन्द्रीयः शिक्षामन्त्री डॉक्टर रमेश पोखरियाल निशंकः व्यज्ञापयत् यत् दशम-द्वादश कक्षयोः परीक्षाः फरवरीमासे नैव आयोक्ष्यन्ते। परीक्षायोजनार्थं नूतनं तिथि-उद्घोषणं शीघ्रमेव विधास्यते। असौ प्रत्यपादयत् यत् कोरोना महामार्याः प्रकोपं निधाय विभिन्न-परामर्शानंतरं प्रशासेन निर्णयोयं विहित अस्ति। डॉक्टर निशंकवर्यः आगामि-शिक्षामण्डलस्य परीक्षाः अवलम्ब्य देशस्थैः अध्यापकैः समं सम्वादं साधयति स्म। संवादकार्यक्रमोयं अन्तर्जाल-माध्यमेन समनुष्ठितः आसीत्।

**कोरोना**

प्रशासनं ब्रूते यत् सितम्बर-मासतः देशे कोरोना-संक्रमितानां रोगिणां संख्या अनुदिनं अपक्षीयते। उक्तवक्तव्यं स्वास्थ्य-सचिवः राजेश-भूषणः प्राकाशयत्। असौ नवदिल्यां वार्ताहरैः समं सम्भाषते सम्। दिसंबर षोडश-दिनांकतः द्वाविंशीं यावत् प्रतिदिनं प्रायः चतुर्तविंशति-सहस्रं कोरोना-रोगिणः समक्षमायाताः। अपि च भारते मृत्युमानमपि विश्वापेक्षया वर्तते सर्वाधिकं न्यूनम्। श्रीभूषणः अब्रवीत् यत् भारते इदानीं यावत् आहत्य त्रिंशल्लक्षोत्तर षोडश-कोटि-परीक्षणानि विहितानि। ब्रिटेनदेशे विषाणोः अभिनवं रूपं दृष्ट्वा भारतेन एस् ओ पी इति मानक-संचालन- प्रक्रिया प्रख्यापिता अस्ति। एतदनु विगते सप्ताह-चतुष्टशे समेपि अन्तार्राष्ट्रिय-यात्रां कृतवन्तः जनाः नैजं यात्राविविरणं प्रदास्यन्ति। अनन्तरं यात्रिभ्यः प्राप्तं विवरण-पुरस्सरं महामार्याः यथोचितं अन्वीक्षणं परीक्षणं च विधास्यते। सममेव ब्रिटेन-देशस्य विभिन्नेभ्यः विमानपत्तन-स्थलेभ्यः विगते दिवसत्रये भारतं समागतेभ्यः यात्रिभ्यः, सम्बद्धानि राज्यशासनानि कोरोना-परीक्षणस्य सौविध्यं प्रदास्यन्ति। एतदतिरिच्य ब्रिटेनतः भारतं सम्प्राप्यमाणाः सकलाः विमान-समवायाः सद्यः प्रख्यापिते मानक-संचालन-प्रक्रिया-विषये यात्रिणः बोधयिष्यन्ति। देशे कोरोना-संक्रमणस्य स्वस्थता-प्रतिशतता संवर्ध्य पंच-नवति-दशमलव षट्-पंच-परिमिता संवृत्ता। विगते अहोरात्रे भूयोपि त्रिशंत् सहस्रं संक्रमिताः जनाः आरोग्यम् अवाप्तवन्तः।

अद्यावधि कोरोनातः स्वस्थीभूतानां संख्या आहत्य षट्त्रिंशत् सहस्रोत्तर षण्णवति लक्षमिता संजाता। तत्रैव प्रत्यहनि षट्पंचाशदुत्तर-पंच-शताधिक-ऊनविंशति-सहस्र-संख्यानि संक्रमणस्य नूतनानि प्रकरणानि समक्षमायातानि। इत्थं संक्रमितानां संख्या आहत्य देशे पंच-सप्तति-सहस्रोत्तर-एककोटिमिता समंकिता।

**।। इति वार्ताः ।।**